## श्रीगुरुचरणे ।

वारं वारं कुपथगमनं सार्वसिद्धान्तसक्ता
दारं दारं रतिपतिबलं भग्नमोहादिदोषाः ।
धारं धारं यतिपतिपदं शासनानर्घ्यसेवा
जीयासुस्ते जगति जयिनो दानसूरीशितारः ॥

× × × ×

शोपं शोपं घनमघगणं ख्यातपुण्यप्रभावा–
स्तोपं तोपं भविकहृदयं जैनवाङ्मेघनीरैः ।
पोषं पोषं भुवि जिनमतं नीतपुण्यप्रकर्षा
जीयासुस्ते जगति जयिनो दानसूरीशितारः ॥

+ + + +

प्रपूज्यानां येषां पुनितपुनिते पादजलजे
विनेया भृङ्गाभाः श्रुतपरिमलापानममलम् ।
प्रकुर्वन्त्युत्कण्ठप्रथितमतयः प्रत्यहनिशम्,
प्रपान्तु श्रीदानाः प्रथमविजयाः सूरिसुपमाः ॥

× × × ×

सिद्धान्ताब्धिविलोडनोत्थविशदज्ञानादिरत्नत्रयम्,
योग्येभ्यो वितरन् समाहितमना भूमीतलं भासयन् ।
सोऽयं सद्गुरुभास्करो विजयतां श्रीदानसूरीश्वर–
स्तस्यैव स्तवनाष्टकं दिनमुखे भव्या मुदा पठ्यताम् ॥

Published by Seth Shantidas Khetsi, Champa Galli, Bombay.

Printed by Ramchandra Yesu Shedge, at the "Nirnaya Sagar" Press, 26-28, Kolbhat Lane, Bombay.

"कल्याणोदरसत्कीर्त्तिं, शीतांशूज्ज्वलसंयमम् । वन्दे श्रीवीरविजयो–पाध्यायं मुनिपुङ्गवम् ॥१॥"

सद्धर्मोद्धारक–न्यायांभोनिधि–श्री १००८ श्रीमद् विजयानन्दसूरीश्वर–शिष्यरत्न–

" ઉપાધ્યાયજી શ્રી ૧૦૦૮ શ્રીમદ્ વીરવિજયજી મહારાજ. "

" Upadhyayaji Shree Virvijayaji Maharaj. "

" उपाध्यायजी श्री १००८ श्रीमद् वीरविजयजी महाराज।"

जन्म वि–स–१९०७ पडवा ( भावनगर ) — उपाध्याय पद १९५७ पाटण ( गूजरात )

दीक्षा वि–स–१९३५, अंबाला ( पंजाब ) — स्वर्गवास— १९७५ खंभात ( गूजरात )



" प्रकाशक–बीकानेर ( हाल–कलकत्ता ) वाला शेठ सुमेरमलजी सूरानाजी।"

ડીલીક્ષ પ્રી વર્કસ અમદાવાદ.

# संक्रमकरणद्वितीयविभागगतविषयानुक्रमः ।

## संक्रमकरणद्वितीयविभागगतयन्त्रानुक्रमः ।

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| संस्थान | संघयण | १ | १७ |
| निन्द्रा | निद्रा | २ | ४ |
| कर्माणि | गुणस्था० | ,, | १ यन्त्रस्था |
| ,, | ,, | ३ | ,, ,, |
| १ | २ | ,, | १०-२ ,, |
| मुद्योतेन | उद्योतेन | ४ | ९-३ ,, |
| त्रिंशतिबन्वे | त्रिंशति बन्धे | ५ | ५ |
| पञ्चापि | एषु चत्वारि | ,, | १२ |
| भङ्गः, | भङ्गः एका च यशःकीर्त्ति | ,, | ,, |
| स बन्धइ" | न बन्धइ | ९ | ३ |
| देशविरताऽप्रम | देशविरताव-प्रम- | १२ | ४ |
| साधारणप्रत्ये-काभ्यां | बादरसाधा-रणाभ्यां | १३ | १२ |
| ,, | ,, | ,, | १४ |
| बन्धेष्टाष्टा | बन्धेऽष्टावष्टा | १५ | ४ |
| एकोनत्रिंशदे | एकोनत्रिंशत् त्रिंशदे | १८ | १० |
| | १ । १ | १९ | १७-१-२द्वि.यं. |
| ८२१६ | ९२१६ | २८ | २-२ ,, |
| क्षुल्लकभवायु-ष्वतां | ...वायुष्मतां | २९ | १३ |
| पञ्चमभागे | पञ्चमागे | ३० | ८ |
| नरकद्विक | नरद्विक | ३२ | ७ |
| सातारूप | सातरूप | ३५ | ४ |
| उपशान्तमोहे | उपशान्त० क्षी० स० च | ३७ | ११-१ यं० |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| सम्यग्दृष्टिमनु० | सम्यग्दृष्टि-तिर्यग्मनुजाः | ३८ | ६-४ यं० |
| ,, नराः | स०तिर्यग्नराः | ३९ | २-,, द्वि० |
| एकोनत्रिंशत्पष्टौ | एकोनत्रिंशति षोडश | ४० | ८ |
| चतुर्विंशतिर्भव-तीति | द्वात्रिंशद्भ-ङ्गा भवन्तीति | ,, | ९ |
| सर्वाग्रम्—२४ | सर्वा०-३२ | ४२ | द्वि. यं. शीर्षम् |
| मनुजाः | सम्य० म० | ,, | ३-४ ,, ,, |
| २९-८ | २९-८ ८ | ,, | ३-१-२ ,, ,, |
| ,, | देवनारकाः | ,, | ४-४ ,, ,, |
| सम्यग्दृष्टयो देवाः | सम्य० देवा नारकाश्च | ,, | ५-४ ,, ,, |
| २५।२५ | २५।५ | ४७ | ३-२ यं |
| तिर्यग्मनुजाः | तिर्यग्मनुजा देवाश्च | ,, | १०-४ ,, |
| देवप्रा० ८।,, | — | ,, | ४-३ ,, |
| प्र०चतुष्के | अप्रत्या०प्र० चतुष्के | ४९ | प्र० यं० शीर्षम् |
| १३९६२ | १३९४२ | ,, | ,, |
| २५।२५ | २५।५ | ,, | ३-२ ,, ,, |
| १३९४६ | १३९२६ | ,, | द्वि. यं. शीर्षम् |
| २५।२५ | २५।५ | ,, | ३-२ ,, ,, |
| स० १६ | स०—२४ | ५० | ,, शी. |
| — | २८।दे०प्रा० ८। तिर्यग्नराः | ,, | २-१-२-३-४ ,, |
| ६ | ५ | ,, | ४-९ तृ. |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| जेह | जह | ५१ | २० |
| १ | ०: | ५३ | १०-९ पं० |
| अष्टौ | नव | ,, | १५ |
| भवति, | भवति। केवलज्ञानमार्गणायां सातरूपैकैव प्रकृतिः सयोगिकेवलिनि बन्धमायाति। | ५५ | ११ |
| बन्धप्रकृतिभङ्गयन्त्रम् | बन्धप्रकृतियं० | ,, | पं० शीर्षम् |
| सम्यगिमथ्यात्वयुते... | सम्यक्त्वसम्यगिमथ्यात्वयुते.. | ७३ | १ |
| मिथ्यादशां | मिथ्यादशामनादिमिथ्यादशां वा | ,, | ८ |
| अरतिशोका.. | असातारतिशोका.. | ७४ | २० |
| संस्थानाप्रशस्त | संस्थानप्रशस्त | ,, | २३ |
| मानवर्जैकोनविंशति- | मानवर्जैकविंशति.. | ,, | २७ |
| मायावर्जैकोन | मायावर्जैक | ,, | ,, |
| उपशान्तेऽसात | उपशान्ते सात | ,, | २९ |
| एकं | एका | ७६ | ३ |
| प्रमत्तादित्रिके | प्रमत्तादिद्विके | ,, | १२ |
| भवन्ति। | भवन्ति। अपूर्वकरणे एकादशनवरूपे द्वे भवतः। | ,, | १३ |
| ,, | ० | ७७ | २-११ पं० |
| ३३ | ३२-३३ | ७८ | ६-७ प्र. पं. |
| ७३ | ७२-७३ | ,, | ,,-१० ,, ,, |
| तैजसक | तैजसकायिक | ७९ | २४ |
| पत० ११- | पत० ८ | ११७ | २-२ पं० |
| १९,१८,१७ | १९,१७ | ,, | ,, ,, |
| १५,१४, | १५,१३ | ,, | ,, ,, |
| ११-१०-९ | ११, ९ | ,, | ,, ,, |
| ४,२ | ४,१,२ | ,, | ८-२ ,, |
| उदयसंभाव्यप्र० | उदयसंभाव्यमानप्र० | १३८ | २टीप्पण्यां |
| प्रक्षिपतीति वीते | प्रक्षिपतीति | ,, | ,, ,, |
| दशवर्पस्थितिको | दशसहस्रवर्षस्थितिको | १८० | १३ ,, |

एवमन्या अपि याः काश्चिदशुद्धयो भवेयुस्ताः कृपावद्भिः संशोधनीया इति विज्ञप्यते।

## सद्वितीयेऽस्मिन्ग्रन्थ उल्लिखितानां ग्रन्थानामकाराद्यनुक्रमः।

(१) आचाराङ्गम्
(२) आवश्यकसूत्रम्
(३) ,, निर्युक्तिः
(४) ,, चूर्णिः
(५) ,, वृत्तिः
(६) उपदेशपदम्
(७) कर्मप्रकृतिः
(८) कर्मप्रकृतिवृत्तिः (श्रीउपाध्यायजी)
(९) ,, ,, (श्रीमलयगिरिजी)
(१०) ,, चूर्णिः
(११) ,, प्राभृतम्
(१२) कल्पभाष्यम्

( १३ ) कल्पभाष्य वृत्तिः
( १४ ) गुणस्थानक्रमारोहसूत्रम्
( १५ ) ,, वृत्तिः
( १६ ) गोम्मटसारः ( दिगम्बरनेमिचन्द्रः )
( १७ ) ,, वृत्तिः
( १८ ) तत्त्वार्थसूत्रम् ( श्रीउमास्वातिजी )
( १९ ) ,, भाष्यम् ( श्रीउमास्वातिजी )
( २० ) ,, वृत्तिः ( श्रीसिद्धसेनजी )
( २१ ) ,, ,, ( श्रीउपाध्यायजी )
( २२ ) दर्शनशुद्धिप्रकरणम्
( २३ ) धर्मपरीक्षा
( २४ ) धर्मसंग्रहवृत्तिः
( २५ ) नव्यशतकम्
( २६ ) ,, वृत्तिः
( २७ ) नव्यबन्धस्वामित्वम्
( २८ ) ,, वृत्तिः
( २९ ) पंचसंग्रहः
( ३० ) ,, वृत्तिः ( स्वोपज्ञ )
( ३१ ) ,, ,, ( श्रीमलयगिरिजी )
( ३२ ) पञ्चाशकः
( ३३ ) ,, वृत्तिः
( ३४ ) पञ्चवस्तु
( ३५ ) प्राच्यबन्धस्वामित्वम्
( ३६ ) प्रज्ञापनासूत्रम्
( ३७ ) ,, वृत्तिः
( ३८ ) बृहत्कल्प–भाष्यम्
( ३९ ) ,, वृत्तिः
( ४० ) बन्धस्वामित्वावचूर्णिः
( ४१ ) ,, वृत्तिः
( ४२ ) योगशास्त्रवृत्तिः
( ४३ ) लघुसंग्रहणी
( ४४ ) लोकप्रकाशः
( ४५ ) विवाहप्रज्ञप्तिसूत्रम् ( श्रीभगवतीजी )
( ४६ ) ,, वृत्तिः
( ४७ ) विशेषावश्यकभाष्यम्
( ४८ ) विशेषचूर्णिः
( ४९ ) विचारसारः ( देवचन्द्रः )
( ५० ) व्यवहारभाष्यम्
( ५१ ) शतकसूत्रम्
( ५२ ) शतकचूर्णिः
( ५३ ) ,, वृत्तिः
( ५४ ) श्राद्धप्रज्ञप्तिवृत्तिः
( ५५ ) श्राद्धविधिः
( ५६ ) षडशीतिः
( ५७ ) सप्ततिका
( ५८ ) ,, वृत्तिः
( ५९ ) सप्ततिकाभाष्यम्
( ६० ) ,, ,, वृत्तिः
( ६१ ) संस्कृतबन्धस्वामित्वम्
( ६२ ) सिद्धहेमशब्दानुशासनम्



## शासन-प्रभावक, प्रवचन पारंगत-



## "आचार्य श्रीमद् विजयदानसूरीश्वरजी महाराज ।"

"गम्भीरिमाधरितवारिनिधि: प्रवृद्ध- बोधप्रभाप्रतिहतांशुमदिन्दुधामा ।
रत्नत्रयीवितरणाञ्चितपारिजातो, जीयात्प्रभुर्विजयपूर्वकदानसूरिः ॥१॥"

# यत्किंचित्प्रास्ताविकम् ।



प्रेमावासमनोहराकृतितया संस्थाप्य सार्वेश्वरान्,
भूयस्तान् परिभाव्य सद्गुरुगणाञ्ज्ञातप्रभावान्मुदा ।
नीत्वा तां श्रुतदेवतां स्मृतिसृतौ संवित्तिसंपत्तये,
किंचिज्ज्ञो द्वितये प्रयामि विषये श्रीसंक्रमप्रक्रमे ॥ १ ॥



अथाधुना कोविदकोटिकोटीरसिद्धान्तमहोदधिपाठकप्रकाण्डश्रीमत्प्रेमविजयगणिप्रवरोपज्ञसंक्रमकरणाभिख्यस्यास्य ग्रन्थनसंदोहललामभूतस्योपन्यासावसरे प्रतिपादनपरमार्थतापराक्रान्तविषयत्रितयमध्यात् प्रस्तुतप्रकरणोपोद्घातमयं तावदेकमेव विषयं प्रथमे विभागे निरूप्यावशिष्टविषयद्वयव्याख्यानान्तरे विभागे यथाबुद्धिबलं यत्किंचिद्यत्नो वितीर्यत इति विदांकुर्वन्तु विद्विविदिषावन्तो विशिष्टवाचकवृन्दाः । तत्र विश्वे तावद्विद्याविषये वेविद्यमानविद्वद्वृन्दस्य खलु विदितमेव यदुत पुरुषविश्वासे वचनविश्वास इति सुप्रतीताप्तोक्तिप्रामाण्याभ्युपेयुषां सर्वेषां प्रकरणप्रणेतृपरिचयः परमावश्यकताप्राकारप्रविष्ट एव । ततो प्रसङ्गानुपातित्वात् प्रणेतृपरिचयाङ्गत्वात्प्रणेतृपरिचयाविनाभावित्वाच्च दूरोत्सारयितुमशक्यः संदृब्धृसमयसंस्तवोऽपीति ।

तत्र प्रथमं तावत् प्रणेतृपरिचयप्रस्तावमधिकृत्य प्रस्तुतसंक्रमकरणप्रकरणप्रणेतृपादाः कर्मसाहित्यार्णवकुशलकर्णधाराः प्रकरणरत्नरत्नाकराः पाठकपुङ्गवपुङ्गवाः **श्रीमत्प्रेमविजयानूचानपादाः** निष्णातशिरोमणि-न्यायाम्भोनिधिनीरागनानीरनिषेविद्वन्निपुण **श्रीमद्विजयानन्दसूरिसुत्रामपदपूर्वाचलप्रतिमत्रद्योतनपरमप्रभावकतातेजस्वितापन्नसद्धर्मरक्षक** **श्रीमद्विजयकमलसूरिपट्टपाथोनिधिनिशामणीनां** पूज्यप्रवेकसंस्तुत्याभेगामिवाचकवास्तोष्पति**श्रीमद्वीरविजयवरचरणां**म्भोन्दिरालयमकरन्देन्दिन्दिराणां शासनसंमान्यप्रवचनपारदृश्वपरमपुरुष**श्रीमद्विजयदानसूरीश्वराणां** विनयावतंसतयाधुनिकानेहसं विभूषयन्ति । इत्थमिदानीं प्रकरणप्रणेतृपरिचयदिग्दर्शनमात्रमेवाभिधायाभिमतविषये प्रयस्यते ।

अत्र प्रणेतृपरिचयाविनाभाविसंदृब्धृसमयसंस्तवमयविषयस्यावान्तरविषयाधिकारमनुलक्ष्य पूज्यप्रवरश्रीमद्विजयानन्दसूरीशिवारः सेव्यतमाः श्रीमद्विजयकमलसूरीश्वरा राद्धान्तरहस्यवेदिश्रीमद्विजयदानसूरिसुरर्षभाश्चावश्यंतया प्रतीतिपथमवतरन्ति । अतोऽधुना विजयानन्दसूरिपुङ्गवं लक्ष्यीकारं यत्किंचिद्वक्तुं प्रयतिष्येऽहम् ।

### श्रीमद्विजयानन्दसूरिपादाः—

चरमतीर्थप्रवर्तकश्रीज्ञातनन्दनशासनाद्यधुरन्धरमुमुक्षुमुख्यमूर्द्धन्यश्री**सुधर्म**स्वामिप्रमुखानेकप्राक्तनाचार्यप्रवरपट्टपरम्परापुष्करप्राप्तपरमोदया द्विसप्ततितमाः सूरिसहस्रभानवः सर्वगच्छशिरोरत्नतपोगच्छन-

भौनभौमणिपरमश्रद्धाकेन्द्रालया यशःपुञ्जधवलितककुबन्तभागाः श्रीज्ञानाम्भोनिधिघटोद्भवनिभचारित्रचूडामणिदेशविदेशप्रसृतकीर्तिपरागोत्करा अमेरिकाराष्ट्रोद्भूतविश्वधर्मपरिषत्स्वीकारापिताईद्धर्माप्रतिमसत्तास्वरूपाः स्वकीयाद्भुतप्रतिभाप्रकर्षेण

## आचार्याग्रणीश्रीमद्विजयानन्दसूरिसंक्रन्दना

आत्मारामजीत्यपरसुविख्यातनामानोऽस्यां विंशतितम्यां शताब्द्यामभूतपूर्वप्रभावकपुरुषपुङ्गवतया प्रादुष्पन्ति स्म इति प्रत्यक्षमेव साहित्यसरोजपरिमलप्रसितमनसाम् । एते पूज्यप्रामहराश्चतुर्थपुरुषार्थसमनिदानसंनिभमानवगलवत्तारास्तित्वायसंबन्धेन सार्धप्रायां विंशतिं शताब्दीं भूषयांचक्रुः । एते मान्यमूर्द्धन्या मूर्तिनिषेधाद्यनेककुमतमतान्तरप्रसारितान्धतमसास्कन्दितविंशतिशताब्दीमध्यभागे महदैतिह्यव्यक्तित्वेन प्रभवन्ति स्म । विश्वसमीचीनधर्मधनमोषकाणां मृषामृषादिसर्वभाषणसमानदृशां करालकलिकालसंसारसमुद्रतरणाप्रतिमोपायभूतजिनप्रतिमापरमपरिपन्थितया तत्त्वत्रय्यन्तःपातिमुख्यदेवतत्त्वभक्षकाणां भवपरंपरानिपातानन्यनिबन्धनकदाग्रहकुटिलशल्यवतां यद्वातद्वालापप्रलापतया स्वकीयमेव सत्यमिति न्यायमधितस्थुषां स्वीयमतकुजालविभेद्यमानत्वाशंकया व्याकरणादिविषयं व्याधिकरणत्वेनानुमन्वानानां वक्षपट्टीकृतानां साधूतामभर्णे सप्तदशसंवत्सरसुकुमारवयःसंप्राप्तदीक्षा इमे सार्वशासनशृङ्गारसंनिभा माननीयमचर्चिकाः संप्राप्तव्याकरणन्यायसांख्यवेदान्तादिदार्शनिकविषयकाध्ययनानुकूलामूल्यावसरं सफलीकारं संजातयथार्थतत्त्वत्रयीसत्तास्वरूपावगमाः प्रतिमापूजापलापिनां कुमतकन्यास्वरूपं सम्यक्तया धिषणागोचरीचक्रुः । ततो मतिविषयीकारमनुसहसैव खलु कुण्डलीकञ्चुकवत् परित्यक्तसंसारपारावारावतारिकाभकुलिङ्गिमत्रय्याः सत्यमेव मदीयमितिसिद्धान्तसुप्रसिद्धवचनबद्धपक्षसेवकाः 'सत्ये भयं नास्ति कचिद्' इति वचने संपूर्णश्रद्धोद्धुरास्त आराध्यपादाः पञ्चनदमण्डलान्निर्गम्य पञ्चदशमुनिमहोदयैः सहानेकोन्मार्गपतितासन्नाश्रुतभावावाप्तस्त्रीपुरुषान् प्रतिबोधयित्वा सत्तरणिमानयन्तः कुकर्मकचवरोत्करापनयनप्रसञ्जनामार्बुदगिरिसिद्धाचलादिस्थलीयतीर्थयात्रां विदधतो धर्मसुवासनासुवासितस्वान्तसरोजमानवसमुदयसुप्रतीते गुर्जरराष्ट्रपाटनगरे राजनगरे तपस्विशेखरयतितिलकमुनिप्रवर**श्रीमन्मणिविजयगणिवरा**न्तिपद्रव्रयोगिजनाग्रगण्यमहात्ममहनीयमुनिरत्न**श्रीमद्बुद्धिविजयगुरुनाविक**वरान्तिके निजसहचरसंयमार्थिसमुदयेन सह स्वकायात्मतरणीं समर्पयामासुः ।

गरीयसी खलु शासनसेवा मान्यसूरिसुरर्षभैर्विहिता । यतस्तत्समयानुवर्तिसमुद्भूतानेकमतमतान्तरैः सर्वज्ञसिद्धान्तोत्थापकसत्क्रियानुष्ठानलोपकप्रतिमापलापकैर्विंशतिशताब्दीप्रादुर्भूतार्यसमाजत्रिस्तुतिकाद्यनेकैः पारमेश्वरपवित्रपदव्यां कण्टकप्रक्षेपकैः पारगतप्रवेदितसनातनसत्यमास्कन्दितुकामैः प्रत्यनीकाद्यैश्च सह वादविवादोपक्षेपप्रतिक्षेपनिरन्तरोद्यताः प्रकान्तालेख्यपादाः स्वकीयसर्वस्वसमर्पकत्वेनापि वरीवर्तन्ते स्म । सर्वेषामनुपदोक्तपाखण्डिप्रभृतीनां मतकन्थां नामशेषकरणे परमपरमेष्ठिप्रणीतपतितपावनप्रवचनप्रभावनाप्रख्याननादं भुवनोदरव्यापकविधाने च ते महर्षिमतल्लिकाः सकलस्वकायप्रतिभाप्राबल्यं व्ययितवन्तः । प्रत्यक्षप्रमाणेन चैतत् विषयीक्रियते पूज्यप्रवेकप्रणीतजैनतत्त्वादर्शतत्त्वनिर्णयप्रासादाज्ञानतिमिरभास्करसम्यक्त्वशल्योद्धारचिकागोप्रश्नोत्तरचतुर्थस्तुतिनिर्णयद्वाविंशतिप्रश्नोत्तरेसाढमतसमीक्षार्थेरेशदर्पणतेरापन्थनिरसनतत्त्वविवरणादिसंदर्भसंदोहेभ्योऽधुनापि स्वयमेव सामान्यधीकैरपि ।

दातव्योपदेशः—

मान्यमुख्यैः प्रोक्तप्रकरणेष्वार्हतानगारसागारस्वरूपमपि न्यरूपि। इह सुप्रसिद्धे सागरप्रमाने सुविस्तृते महति जैनागमे सूत्रनिर्युक्तिभाष्यचूर्णिटीकामयपञ्चाङ्गप्रमाणवादिनि जिनाज्ञास्थसाधुना 'धर्मोपदेश एव दातव्यो मोक्षरूपपरमपुरुषार्थसाधकत्वात्, पुनरर्थकामोपदेशस्तु नैव देयः, स्वकीयपरकीय'संसारवर्धकत्वात्, सांसारिकविद्योपार्जनानुकूलोपदेशः श्रमणानां न युज्यतेतराम्, गृहस्थैः पितापुत्रक'लत्रधनादिसर्वं परकीयं हेयमनित्यं च विलोक्य तत्र रागो न विधेयः, जिनाज्ञास्थगृहस्थस्यापि संसार'वासस्य वाराङ्गनावासानुकारित्वेन भवितव्यं, द्रव्ये दारिद्र्योपप्लुतजनवत् संयमाय श्रावकैर्यतनीयम्, 'बाल्यकाले चेत् संयमो न लभेत तदात्मा वञ्चितो यौवने वञ्चिततरः प्रौढावस्थायां वञ्चिततमश्च मान्यः, 'उपधानोद्यापनादिपवित्रक्रिया अनुष्ठेयेत्यादिवचनप्रततिततिः' कियत्यपि सुधीभिरेषु तेषु मन्यावनीषु निभालनीया नात्रायासारम्भो वितन्यते।

१९४३तमे वर्षे भारतभूमिविभूषणसौराष्ट्रजनपदालिकतिलकीभूतपतितपावनभवपरम्परासंचितपापजन्वालजालविशोषणनिदाघनभोमणिनिभश्रीपुण्डरीकाचलाधिष्ठिते श्रीपादलिप्तपुरे श्रीसिद्धशैलपादमूले ते नायकदेवाः श्रीवीरविभुविरहे तीर्थकरतुल्यसार्वेशशासनशोभावहतृतीयपरमेष्ठिपदे प्रतिष्ठापिताः सन्तः **न्यायाम्भोनिधिविजयानन्दसूरीश्वरत्वेन** बहुत्र तु प्रागवस्थास्य "श्रीआत्मारामजी"त्यभिधानत्वेनास्मिन् जगति विश्रुतिभाजो बभूवुः। आचार्यपदप्रतिष्ठापनकाले तस्मिन्प्रदेशेऽखिलभारतवर्षीयश्रीजैनसंघा एकत्रीभूता आसन्। प्रसङ्गलब्धोऽस्य नागरीयो गौरवाधायकत्वं चतुर्विधसंघमानवमनस्स्वभवत्। अस्मिन्समये ते एक एव समस्तश्रीसङ्घाधिपत्यं कुर्वन्तो भारतभूमिं सौभाग्यवती चक्रुः। आराध्याहर्मणीनामन्तेवासिप्रशिष्यपरंपरापि विशाला बभूव। सर्वसंघाटकसाधुविद्यागुरुमुनिरत्नश्रीलक्ष्मीविजयश्रीहर्षविजयश्रीकमलविजयश्रीवीरविजयप्रभृतयोऽनेके विपश्चिद्पश्चिमास्त्यागितिलका विनयविशिष्टा वाग्मिमुख्याः श्रद्धासंवेगातिशयाः प्रवचनकारादयो बहवो बभूवुः। पूज्यपादपादानुसरणैकतत्परैः सार्वसरणिस्थैर्विजयकमलसूरिवर्यैर्विजयदानसूरिवरादिभिस्तैस्तैः सुयोग्यशिष्यप्रशिष्यैराधुनिकानेहसि तेषां सेव्यसत्तमानां नामकार्यगौरवं जगति यावच्चन्द्र-दिवाकरौ विधीयते। दुष्कर्मयोगात्ते विपथविहारिणो यथाच्छन्दप्रलापिनोऽभूवन् ते जिनाज्ञाबहिर्भूतत्वात् तदारभ्यैव पूज्यपादप्रसादपरीतदृग्लिप्सुहिन्वा बभूवुः। प्रान्ते प्रातःस्मरणीयसूरिसत्तमाः प्रव्रज्यापर्यायं विंशतिवर्षप्रमाणं परिपाल्य साधिकनववर्षपर्यन्तं सूरिपदवीं विभूष्यानेकशः पारगतप्रवचनात्प्रतिमप्रभावनां विधाय पञ्चनदजनपदायुपरि पारावारोपकारंकारं क्षणभङ्गुरमिमं व्याधिस्थानं विहाय समाधिसहितं निरामयमक्षराक्षरसाधनार्हनित्यक्षरोच्चारणपूर्वकं भारतभुवं निर्नाथामिव विमुच्य सुपर्वसायुज्यं समाजग्मिवांसः। पूज्यप्रवेकप्रतापपावको यथा सुरालयगमनं प्राग् दुर्धर्षोऽभवत् तथा तदनन्तरमपि वाद्नेत्रलोचनगोचरीबभूवेति वचनापेक्षाविरस्कृतमेव विभावनीयम्, तत्समयविभावनशीलैरिति।

तत्पट्टानन्यप्रद्योतनाः श्रीमद्विजयकमलसूरीश्वराः—

अथ स्वःस्थन्यायाम्भोनिधिविजयानन्दसूरीश्वरपट्टपाथोरुहप्रतिमराजहंससदृशाखण्डसौभाग्यनिधिप्रौढप्रतापप्रद्योतनानुकारिचक्रारविन्दजिनशासनयाथातथ्यमनोवृत्तिभेदाभिधानमान्यमूर्धन्यपूज्यपाद-

## श्रीमद्विजयकमलसूरिकण्ठीरवाणां

संमान्यसत्तमानां सुसाम्राज्यानुपातिनीशासनसेवामधिकृत्याधुना यत्किंचित्परिचयमाधातुं प्रयासलेशविषयीभूतवक्तव्यं वितन्यते । आद्यं तावत्पूज्यप्रधाना एते पञ्चनदसत्कसरसाग्रामप्राप्तजनुषः शैशवावस्थापन्नप्राप्तयतिशिष्यभावाः कियत्कालानन्तरं पश्चात् प्रागुक्ताद्यालेख्यपादैः सह राजनगरे शुद्धसंवेगीसंयमं जगृहिरे । आराध्याग्रेसामिन इमे बालब्रह्मचारित्वेन शासनरक्षायै सर्वस्वसमर्पकत्वेन कान्तिसागरतया विशिष्टप्रौढप्रतापकलितत्वेन कुमततमतिमिरनिरासकत्वेन स्याद्वादसिद्धान्तमार्तण्डप्रभाप्रकाशकत्वेन निर्भयसत्यप्रवक्तृत्वेनेत्यादिधर्मसाकल्येनादिमाचार्याणां सादृश्यं बिभरांबभूवुः । तस्मात्त एव तत्पट्टविभूषकत्वेन योग्यतापन्ना आसन् । ततो यदि ते एव पूज्यपादाग्रहरा तथा भवेयुस्तदा तादृग्भावाध्याप्यमानान् तान् कः शेमुषीमच्छिरोमणिर्वारयितुं प्रभवेत् ।

अथ गच्छनायकन्यायाम्भोनिधिश्रीमद्विजयानन्दसूरीश्वरे सुपर्वसदने समागते सति कियत्कालानन्तरं श्रीमत्कमलविजयपादान्गच्छाधीश्वरान् कर्तुं सर्वसंघाटकसाधवो गुर्जरपाटननगरपत्तन एकत्रीभूताः । थ आगन्तुं न शक्नुयुस्तेऽपि श्रीमन्तं सूरिपदेन शासनपतिं कर्तुं प्रार्थितवन्तः । निस्पृहशेखरा इमे तु नैव कक्षीकुर्वन्ति तथापि सर्वैः सम्भूय महत्प्रयासाग्रहाभ्यां प्रसह्य स्वीकारापिताः । तैर्निर्ग्रन्थशेखरैः सह श्रीवीरविजयपादानामुपाध्यायोपपदादिसंप्रदानार्थमपि निश्चायितम् । एवं प्राक्तनप्रभावसुप्रतीतगुर्जरपाटननगरपत्तने सानन्दसुन्दरसमारोहसहितं सर्वसंघसमक्षमनुपदोक्तपदवीप्रतिष्ठा बभूव यतःप्रभृति मदीयद्वितीयालेख्यदेवा मुनिप्रवरश्रीकमलविजयधराः सद्धर्मरक्षकसेव्याग्रगाः **श्रीमद्विजयकमलसूरिसार्वभौमत्वेन** श्रीजिनशासनमलञ्चक्रुः ।

अथानन्तरं प्रक्रान्तसूरिसहस्रनेत्रैर्नानधिका नागरिष्टा च जिनशासनप्रभावना विहिता । तेषां पापपुञ्जापहारिपुण्यनामधेयानां तावत् जिनशासने क्लेशदावानलजनकजिनाज्ञाविपथगाम्युत्सूत्रप्ररूपकजिनमार्गकण्टकानां तादृशापदस्थपदस्थवेशविडम्बकानामपि शासनरक्षायै कर्तव्यतापन्नबहिष्करणरूपानेकशासनकार्याणि दृष्टिगोचराणि भवन्ति स्म ।

एकदा सूरीशितृवर्या विहरन्तो विहरन्त ईडरनामनगरं प्रापुः । तत्रत्यप्राकारस्थचैत्यानां जीर्णोद्धारं कारयामासुः । दावडनृपमुपदेश्य तत्रस्थकासारानुवर्तिमत्स्यहनननिवारणार्थमेकं शिलालेखं कारयांचक्रुः । पुनर्गृहीतविहगान् मोचयित्वाभयदानं दापयामासुश्चेति महतीं प्रवचनप्रभावनां विधायाराध्यवर्यास्तम्बावतीं प्रति विहृतवन्तः ।

### उपाध्यायपादाः—

अस्मिन्नवसरे पाठकप्रवरा अपि सीहोरनगराद्विहृत्य घोलेराख्यग्रामनिकटे समाजग्मुस्तत्र संघाटकधेहिष्कृतस्यैकदम्भविश्वस्तस्य पत्रस्तेषामुपरि संगमनार्थमागतः प्रत्युत्तरमप्यदीयत यत्त्वया सह संगन्तुकामोऽहं नास्मि । पश्चात्ते बोरुं प्रति प्रापुस्तत्र तु स प्रागेव त्रम्बावत्याः कतिचिद्राजचन्द्रोपासकजनैः सह समागत्य तान् पूज्यान् प्रतीक्षते स्म । तेन स्वेन सह स्थातुं निर्बन्धं प्रार्थिता उपाध्यपादा व्याचक्षते स्म 'अधर्मिवर्गसाहाय्यकारित्वात् तेषां निलयनिवासित्वात्सद्धर्मोत्तीर्णसांसारिकविद्योपार्जनादिदेशकत्वात् सूरिप्रवराज्ञावमन्तृत्वाच्च मम प्रति तव .प्रार्थना मृषापार्थके'ति । ततस्ते पृथक् निवस्य पृथग् चाहा-

रादीन् विधाय स्तम्भतीर्थं प्रति गतवन्तः। तत्र चाचार्यपादा मीलिताः। आचार्यपादैश्च तत्रैव चातुर्मासीकृता। वाचकवरैस्तु वटादाराख्यग्रामे वर्षावासः कृतः। तत आचार्याभ्याः कण्ठव्रणजमवाप्य तत्रैव चातुर्मासी चक्रुर्वाचकवरास्तु भृगुकच्छाख्यनगरे चातुर्मासीं कृतवन्तः।

## पाठकप्रवरपरलोकप्रयाणम्—

सूरीशितारः क्रमेण विहृत्य थोरसदं शुशुभुः। पाठकप्रवरास्तु निर्गम्य ग्रम्यावटीमाययुः। एतच्चातुर्मासमाचार्यपादास्तत्र विधाय पुनः स्तम्भतीर्थं समाजग्मिरे। तत्र चातुर्मासानन्तरं वैक्रमीय १९७४ परिवत्सरे मृगशीर्षासिताष्टम्यां प्रतिभयवासरे आराध्याग्रगण्योपाध्यायश्रीवीरविजयवर्याः सर्वसंघसमुदायान्सर्वजनपदान् सपरिजनानतिशयशोकनीरनिधौ क्षिप्त्वेमं भूलोकं विहाय निजसमुदायं परित्यज्य क्षणभङ्गुरं स्वीयशरीरं त्यक्त्वाऽऽत्मीयशरीरनिष्ठाराध्यभावं च सह नीत्वा स्वर्भुवं प्रतिजग्मुः। ततोऽनन्तरमाचार्यायां वटपद्रं संप्रापुः।

ततोऽनु सूरिसुत्रामाणः पन्यासश्रीदानविजयगणिवरैरिमां चातुर्मासीं दर्भावत्यां कृतवन्तः। तत्रैव अनुयोगाचार्यमतल्लिकाः पुनरस्य ग्रन्थस्य प्रथयितृपादान् विवाहप्रज्ञप्तियोगोद्वाहनं वाहयित्वा गणिपदेन भूषयांचक्रुः। सूरिसुत्रामाणः पुनः क्रमशस्तम्भावटीवटपद्रछायापुर्युमेदादिस्थलेषु चातुर्मासीः प्रसारयामासुः।

## स्वपट्टपदवीप्रदानम्—

शून्यवसुनन्देन्दु(१९८०) वर्षीयचातुर्मासे छायापुर्यां श्रीसूरिवराध्यक्षतायामुपधानतपोवहनं बभूव। वहवो जनाः सद्धर्ममार्गे स्थिरीबभूवुः। पन्यासश्रीदानविजयानूचानपादा मुनिश्रीलब्धिविजयान् श्रीपञ्चमाङ्गभगवतीयोगान् कारयांचक्रुः। ततोऽन्वेकाशीत्यधिकैकोनविंशतिशतविक्रमवत्सर आम्नायणिकायपक्षपञ्चमीपवित्रवासरे छायापुरीनगरे पूज्यप्रवेकश्रीमद्विजयकमलसूरीश्वरा भव्यसमारोहमालारोपणमहोत्सवपुरस्सरं विहितयोगानुष्ठानौ पन्यासश्रीदानविजयश्रीलब्धिविजयगणिवरौ स्वीयपदे स्थापयामासुस्ततस्तौ पूज्यप्रवरश्रीमद्विजयदानसूरीश्वरत्वेन श्रीमद्विजयलब्धिसूरित्वेन च विश्रुतिवन्तौ अभूताम्।

अपि चान्याः पुनः प्रवचनप्रभावनाः कर्तुं प्रस्तुतसूरिप्रकृष्टा न प्रतिबध्यतां प्रापुः। यथा पञ्चाधिकैकोनविंशतिविक्रमपरिवत्सरे मोगरदेवाणाभिख्यग्रामयोर्नृपान् समुपादेश्यापूर्वाहिंसां पालयांचक्रुरेकषष्टिहायने वटपद्रनरेशमुपदेशयामासुर्द्विषष्टिशरदि बंगालं प्रति विहृत्य मार्गेऽनेकमांसाशनेभ्यो जीवेभ्यो मांसादनं मोचयांचक्रुः। प्राक् पञ्चनदे गुजरांवालाधीशोऽपि (सरदार) सूरिवरोपदेशेन मांसाहारतोऽरक्ष्यत। पवणसायां चानार्यचूडामणिरपि मांसभोजनं त्यक्तवान्। द्विषष्टिवर्षेऽजीमगञ्जे पर्युषणाकल्पं विधाय तत्रत्यबाबूजनानां कासारे भवज्जलचरजीवातिपातं प्रतिबध्यतां प्रापयत्। चतुष्पञ्चाब्दे गुजरांवालानगरे पूज्यपरिवृढविजयानन्दसूरीश्वरमूर्तिपादुकयोः प्रतिष्ठा कारिता। सप्तसप्ततिसंवत्सरे रुमेटानगरनृपं प्रतिबोध्य जीवाहिंसां वर्धिष्णुतामुपनीतवन्तः। तच्चातुर्मासं च वटपद्राख्यनगरे विधाय स्वप्रजन्यद्रव्यं लायब्रेरीमध्ये नयनात्मकात्मनाशकप्रयत्नात् तत्रत्यसंघं समुपदेशं दत्वा रक्षितवन्तः। भूयोऽत्रान्तरे तत्रत्यनरेशं चासुमदतिपातापासनार्थं समुपदिदिशुः। एकाशीतिवर्षे चातुर्मासीं सुरतवन्दरे विधाय तत्रत्यतापीसरित एक माइलप्रमितदीर्घविभागे मत्स्यहननिवारणाय सैनिकाध्यक्ष-

( Police Superintendent ) शुपदेशं प्रदायादेशं निष्कासयांचकुः । तेषां सदुपदेशेन च तत्र त्रिंशत्स-हस्रपर्यन्तं प्राचीनपुस्तकोद्धारफंडमेकं सीदच्छ्रावकोद्धारफण्डमपि च श्राद्धवरैः प्रस्थापितमद्यापि प्रचलति । इत्थं मरा अपि प्राज्यप्रवचनप्रभावना इमे पूज्यप्रवेका विदधुरेव ।

### चरमावस्था—

ततोऽनु छायापुर्या निर्गम्य स्थविरावस्थापन्ननैसर्गिकशरीरशैथिल्यप्रासङ्गिकार्त्तावस्थादिकारणकला-पपूरितेऽपि स्वीयस्वास्थ्ये सुरतबन्दरं संघविशेषामहवशात् प्रवचनप्रभावनाशीलत्वाच्च स्वकीयस्वभावस्य पूज्यपादा इमे आचार्यप्रेसराः स्वीयपट्टपाथोनिधिपीयूषपादाभ्यां सह तादृक्सामर्थ्याभावेऽपि शनैः शनैः सुरतबन्दरं समीयुः । एकाशीतिवत्सरचातुर्मासीं तत्र च विदधुः । तत्र पुनः निरतिशयानि शास-नोन्नतिकारकाणि शुभकार्योण्यनेकानि स्वीयपवित्रजनुषं लेभिरे । महोपधानतपोमालारोपणमहोत्स वादी न्यप्यभूतपूर्वाणीवाबीभवन् । तत्र चातुर्मासं समाप्येमे सेव्यसत्तमसूरिसंक्रन्दना बुहारीं प्रतिगताः । तत्र आराध्यामेगामिनः श्रीमद्विजयदानसूरीश्वरा राजनगरं प्रति पूज्यानुज्ञया व्यहरन् । सूरिसत्तमा बु-हार्यां महोपधानतपःप्रभृतिप्राज्योत्सवपुरस्सरं चचातुर्मासीं किंचिच्छारीरिकातिशायिवाऽभ्यमितावस्थासहितं समाप्य जलालपुरं प्रति प्रयाणं चक्रिरे । यो जगत्पराभवकुशलः कीनाशस्तपोबलादद्ययावत् सूरिवरसमीपे गन्तुं प्रभविष्णुर्नाभूत्स त्र्यशीतिसंवत्सरस्य माघासितपष्ठीवासर आगतो यदा स श्रीसार्वशासनसर्वस्व-तपोगच्छनभोनभोमणिरिमं क्षणविनश्वरदेहं परित्यज्यास्तंगतो बभूव । तदेव वर्षं तदेव मासं तदेव दिनं तदेव समयोऽद्यापिपर्यन्तं कस्य शैलसारान्तःकरणस्यापि सचेतसो हृदयं न परिज्वालयति नेत्रे न साश्रुणी विदधात्यात्मानं च शोकापारपारमज्जितं न करोति । ननु च स संवत्सरोऽपि धन्यः स मासोऽपि धन्यः स वासरोऽपि धन्यः यः सूरीश्वरस्वर्गगमनसमाधिसाधनतया सानन्दभक्तिगौरवं प्रतिपरिवत्सरं लोकैः स्मृतिपथमुपनीयते । तत् ग्राममपि धन्यं सौभाग्यभाजनं च यत्तेषां सूरीशितॄणां स्वर्गमनेन तीर्थभूमिर्बभूव । यच्च तेषां पट्टपूर्वाचलप्रद्योतनप्रतिष्ठितपट्टधरमध्यस्थितमूर्तिपादुकादर्शनवन्दनमिषेणाने-कमहर्षिमचर्चिकैरपि पवित्रीक्रियते स्मृतिविषयतां चोपनीयते इत्यपि विशुद्धविवेचनया विवेचनीयम् ।

### सद्गुणसम्भारः—

एतेषां चक्षुष्यचूडामणीनां सूरिसंक्रन्दनानामसाधारणः पुण्यप्रतापतपोनिष्पापहृदयानां जन्तूनां यादृग्मनोमोदावहस्तादृगेव मायामयदुष्टप्रतारकान्तःकरणानां स्वान्तसाध्वसकरः । नमस्करणीयन-मस्कार्याणामेषां प्रतनैष्ठ्यं निस्पृहिशेखरत्वं यथातथ्यस्पष्टवक्तृत्वं दयालुत्वमप्रतिमशासनानुरागादयो गुणा यादृशास्तादृगालेखने सामर्थ्याभाव एवास्या लेखिन्या इति विभावनीयम् । किं बहुना कथनीयेन सर्वाद्भुतनिधीश्वराणां सर्वमद्भुतं स्मारं स्मारमधुनापि नः शिरांसि तेषां तारकतल्लजानां पादपयोरुहे भूयो भूयो नमन्ति । सूरिसुन्दरसमयोद्भूतनास्तिक्यादिनिपुणशासनकण्टकानां मर्दने न्यूनतालेशेना-पि विना ते नमस्कार्दमधानाः सदा बद्धकक्षाः समासीरन् । देवद्रव्योत्थापकोन्मार्गोपदेशकापसदानां साध्वामासानामपि निरसने इमे आराध्यामेगामिनो न शान्तिलेशमपि सिषेविरे । मिथ्यावादखण्डने सम्यग्वादमण्डने च ते तेषां पुरोगामिशासननायका इव सदा सज्जीभूता अमूवन्नित्यत्र विस्तरेणेति ।

## आचार्यशेखराः श्रीमद्विजयदानसूरीश्वराः

अथ प्राक्परिचायितपूज्यप्रमुखप्रातःस्मरणीयपुण्यनामधेयतेजस्वितातरलायितनिम्नविपः श्रीमद्विजयकमलसूरीकण्ठीरवायपट्टपूर्वपृथ्वीधरपरमप्रद्योतनाः परमाराध्यपादपरमपवित्रगुणगणाम्बुनिधिपाठकप्रवरश्रीमद्वीरविजयगणिवरपादपद्ममकरन्दमधुव्रताः सकलसिद्धान्तरहस्यवेदिनो बालब्रह्मचारिणः परमप्रामाणिकप्रकाण्डाः शासनमान्यश्रीमद्विजयदानसूरीशितारोऽधुना मदीयतृतीयालेख्यपादत्वेन समवतरन्तीति सङ्कल्पयितव्यतानुप्राप्तमेव। एते आराध्यानूचानावतंसका रमणीयजिनमन्दिरनिकेतनगुर्जरदेशस्थझींझुवाडाख्यनगरलब्धजनुषो बालब्रह्मचारिणो नैसर्गिकापावरमणीयसांसारिकस्थितिमवगम्य मोहनिविडसाम्राज्यशालिनीं चैमविकीं मूर्च्छां परित्यज्याहर्मुखामिगरणीयपूज्यप्रधानश्रीमद्विजयकमलसूरिपुरन्दरसाम्राज्यधुरन्धरपरमगुरुवर्यपाठकप्रवरश्रीमद्वीरविजयानूचानपादोपकण्ठे जगचारकपरमेश्वरप्रदिष्टप्रव्रज्यास्वीकाराय कतिवारं प्रययुः किन्तु मुग्धलोकानुरञ्जनार्थं पुत्रप्रेमाधिक्याक्रान्तान्तःकरणत्वेन तेषां ज्ञातजनास्तान् तत्रागत्य प्रतिनिन्यिरे तथापि चारित्रधर्मानुरक्तचित्तवान् ते स्वजनास्तदितरयत्संसारकारागारपातने नालंभूष्णवोऽभवन्, यतोऽल्पकालानन्तरमेव पुनः पाशस्थितपक्षिवत् योग्यसमयमुपलभ्य प्रागुक्तगुरुदेवसनीडे तां हृदयहृद्यां भागवतीदीक्षां ते प्रतिपेदिरे।

## पन्यासगणिपदोपदानम्

बोधिबीजदायकभवोदधितारकाहर्मुखाभिस्मरणीयपूज्यप्रधानगुरुगुणगुरुगुरुचरणानन्यशुश्रूषासंसक्तसेवाः कमनीयाराधकभावाकुलितकामनाप्रभृतिकारणकलापेनानल्पविद्याविचारसारं विशिष्टग्रहणधारणस्मरणप्रतिभाप्राबल्यसंपन्नाः प्रतिप्रातःस्मरणीयाभिख्या एते अल्पेतरानेहसा जगृहिरे। कियत्कालानन्तरं गुणगणानुसारिणीं सूत्राध्ययनाविनाभाविनीं योग्यतामनुक्रम्य श्रीमदुत्तराध्ययनाचाराङ्गकल्पसूत्रप्रभृतिसूत्रयोगोद्वहनं विधाय तांस्तान् सूत्रसंदर्भान् पूज्यप्रमुखा इमेऽवलोकितवन्तः सम्यक्। ततः पूज्याज्ञया श्रीमहानिशीथसूत्रकृताङ्गस्थानाङ्गसमवायाङ्गादिसूत्राणां योगोद्वहनं कृत्वा तान् गुणगणग्राह्यमन्यानपि यथायथं धिषणागोचरीचक्रुः। पश्चाच परमचारित्रपात्रपूज्यपन्यासश्रीचतुरविजयगणिपादास्तान् पञ्चमाङ्ग विवाहप्रज्ञप्तियोगोद्वहनं निर्वाह्य पन्यासगणिपदाभ्यां १९६२ वर्षे त्र्म्बावटीनगरे श्रीसङ्घकृतमहामहपूर्वकं विभूषयांचक्रुः, यतःप्रभृति मुनिमार्तण्डश्रीदानविजयपादा जगति पन्न्यासश्रीमद्दानविजयानूचानार्यत्वेन प्रसिद्धिमागताः।

## उपदेशप्रदानादि

अपि च श्रीसिद्धान्तादिविषयेषु ज्योतिःशास्त्रे च ते तथा निष्णाताः प्रतिष्ठाप्रतिष्ठिताश्च सन्ति यथा अन्यसाम्भोगिकासाम्भोगिकगणान्तर्वर्तिनः सिद्धान्तमार्तण्डा अपि तान् पृष्ट्वा समाधानं विदधति। श्रीमतां ज्योतिश्शास्त्रावबोधमधिकृत्य किं वक्तव्येन यतः पूज्यप्रवरसंशोधितान्यज्योतिर्विदप्रदत्तमुहूर्तैर्भारतवर्षचतुष्कोणेषु बहूनि प्रतिष्ठादीनि पुण्यकार्याणि मूलानि भवन्ति च सहस्रैरपि तादृक्षाणि बहूनि कारितानि क्रियमाणानि च वरीवर्तन्ते यत्प्रभावेण च सर्वत्रानन्दमङ्गलानि दरीदृश्यन्ते। एतद्वैक्रमीय १९६८–६९ वर्षमासीद्यदागुरवो वटपद्रनरेशं श्रीमन्तं गायकवाडसयाजीरावं तदनलप्रार्थनया श्रीहेमचन्द्रकुमारपालानुकारिधर्मोपदेशं मासकल्पं राजमन्दिरे श्रावयामासुः। राजाज्ञया

राजपुरुषैः प्रकाशितमस्य पुस्तकं द्वाभ्यां विभागाभ्यामद्यतनदिनेऽपि साक्षीं समर्पयति। एतत्संसदि गुरुभिस्सह पन्यासश्रीमेघविजयपादाः ( वर्तमानविजयमेघसूरिवराः ) मुनिमहत्तमश्रीप्रेमविजयपादाः ( वर्तमानोपाध्यायगणिवरा ग्रन्थकर्त्तारः ) दक्षिणविहारिमुनिवर्य्यामरविजयादयश्च आसीना राज्ञा च सह मन्त्री राजशास्त्री अङ्गरक्षकादयोऽश्रुण्वन्। गुरूपदेशेन राजहृदये सम्यग्जायमाने सत्याकस्मिकोपाधिना राज्ञ आङ्गलदेशगमनमापतितं गच्छता च तेनोक्तं 'भवतामुपकारं न कदापि विस्मरिष्येऽहं भवदत्त-प्रयासं च न निष्फलीकरिष्ये' इति। अस्मिन्प्रकरणेऽपि सङ्घाटकदूरीकृतस्थानिकमक्तैः स्वमात्सर्यदोषेण बहु मातृस्थानं विहितं, तेभ्यः श्रीमतोपालम्भो दत्तः, श्रावितं 'चाहमपि वक्तुं जानामि मैवं कुरुत तत्रैव मम श्रवणमनुजानीध्वं तेनैव मम लाभो भवती'त्येवम्, अन्ते न किमपि तेषां चलितम्। परं दृश्यतां काल-माहात्म्यं यदेताद्दग्धर्माभिमुखसंजातो राजाऽधुना तद्गंधलेशेनापि युक्तो वर्त्तते न वेत्यपि महत्याशङ्का! अस्तु, देवास्तस्मै सद्बुद्धिं ददतु। सर्वानुयोगाचार्यत्वेन गुरुभिरन्या बहुधा शासनप्रभावना प्रभाविता।

## आचार्यपदोपदानम्

तेषां सुकुशादिप्रधानप्रवचनप्रज्ञापनाकुशलत्वाद्यनन्यसदृग्गुणान् समवलोक्य योगादिसर्वावश्यंभावि-क्रियाकलापकलितान्तान्गच्छाधिपतिश्रीमद्विजयकमलसूरिसार्वभौमाश्छायापुर्यां १९८१वर्षीयमार्गशीर्ष-शुक्लषष्ठ्या दिने प्रातःकालीनशुभलग्नोत्तमहे मङ्गलमुहूर्त्ते विधिपुरस्सरं तादृक्प्रवचनप्रभावनाकर्त्तृजिनशा-सनानुरागस्पष्टवक्तृत्वादिगुणगणानुगामिनीसूरिपदव्या विभूष्य स्वीयपट्टपाथोध्याद्यनिशामणित्वेन प्रत-तिष्ठिपन्। एवमनुयोगाचार्यश्रीमद्दानविजयगणिवराश्शासननायकाचार्यपरमेष्ठिप्रवरश्रीम-द्विजयदानसूरिप्रभुत्वेन विश्रुतिमन्तस्सन्तो भूपीठं चिरं पावयन्ति। स्वर्गतसूरीशिष्यैस्सह सूर्य-पुरे चातुर्मासं कृत्वोपधानादिभिस्तत्र शासनोत्कर्षं च कृत्वा पूज्यप्रवरा व्यशीत्येकोनविंशे परिवत्सरे नगरराजिमुख्यराजनगरं प्रति प्रययुस्तत्रानेकेषां मुमुक्षुवर्याणां प्राज्याभूतपूर्वमहोत्सवसहितं पारमे-श्वरीप्रव्रज्याप्रदानेन तैस्तारकतद्धर्जैर्जिनशासनस्य महती प्रभावना विदधे। अत्रान्तरे मुम्बापुरीसंघा-ग्रणीभिरत्रागत्य विविधविषयविलासतरङ्गाकुलितमोहमयीनगरे जिनेश्वरोदितानवद्यमार्गोद्घोषणाय चा-तुर्मासीकरणार्थं विज्ञप्तिर्बाढं कृता। परं पूज्यप्रवेकास्ते ततः प्रस्थातुं नाशक्नुवन्। तच्चातुर्मासं च श्री-स्थानिकसंघाग्रहसातत्येन तैः श्रीराजनगरस्थजैनविद्याशालायां कृतम्।

## मुम्बापुरीगमनम्

अत्रान्तरे गच्छाधीश्वराः श्रीमद्विजयकमलसूरीश्वराः स्वीयाद्भुतपवित्रपावनचरणसरोरुहाभ्यां सौर्यपु-रीसमीपस्थजलालपुराख्यग्राममलंचक्रिरे। परमसेव्या एते जिनशासनोत्कर्षानुरागाः स्वकीयान्ति-मावस्थासन्नसमयं परिभाव्यानेकमुमुक्षुजनदीक्षापरिवर्धमानसमुदायं श्रीमद्विजयदानसूरीश्वरं द्रष्टुं भाविजिनशासनप्रभावनामनुलक्ष्य तीव्रोत्कण्ठिताः सन्ति स्म। पूज्यप्रवेकश्रीमद्विजयदानसूरीश्वराः स्वीयप्रशिष्यमुनिश्रीजम्बूविजयादिमुनिवरैः सह राजनगरान्निष्क्रम्य गच्छाधीश्वरसेवायां संगन्तुं चेलुः। पन्यासप्रवर( वर्तमानपाठकप्रकाण्ड )श्रीमत्प्रेमविजयगणिवरा निजान्तिषद्वनप्रखरप्रवक्तृमुनि-प्रवरश्रीरामविजयवरादिमुनिवरैः सह तत्र तस्थुः। प्रक्रान्तालेख्यपादास्ततः त्र्यम्बावटीं प्राप्य राज-नगरस्थसाधुवराणामागमनार्थं स्तोकसमयमत्रस्थविहारं विलम्बन्ते स्म। अत्रान्तर एव गच्छनायकपा-

शानां सार्वत्रिकशोकोत्पादकतत्कालधर्मभयानकवार्ता श्रुतिपथमागता । अत एव दर्शनाशा निराशारूपेण परिवर्तिता निराशाम्बुनिधिनिमज्जतां च सर्वेषां मनो भृशं खेदं विमरांचकार । पूज्यपादश्रीमत्प्रेमविजयगणिवरा अपि तत्रत्यमुनिवरैः सह राजनगराद्विहृत्य पूज्यपादाचार्यदेवचरणे श्रीस्तम्भतीर्थे समुपस्थिताः । सर्वेषामेवचातुर्मासी तत्रैव बभूव । अत्राप्यनेकेषां भवोदधिपारं जिगमिषूणां मुमुक्षुवर्य्याणां प्रव्रज्याप्रदानं बभूव । चातुर्मासानन्तरं प्रकान्तालेख्यपादाः स्वीयशिष्यप्रशिष्यादिसर्वपरिवारेण सह स्वर्गस्थाचार्यपुरन्दराणां मूर्तिपादुकानां प्रतिष्ठार्थं जलालपुरं प्रति विजहुः । तत्र द्वितीयालेख्यपादानां द्वितीयपट्टधरश्रीमद्विजयलब्धिसूरिप्रमुखैः पूज्यानां महामहःपुरस्सरमनुत्तरं स्वागतं कृतं, पूज्यानां सुधासिद्धदृष्टिपूतवासक्षेपेण तत्र प्रतिष्ठादिसर्वं कार्यं समाप्तिमगात् । ततश्च प्रतिनिवृत्य ते सौर्यपुरीं समाजग्मुः । चातुर्मासीमिमां सूरिप्रवराः स्वीयप्रधानशिष्यपन्यासप्रवरश्रीमत्प्रेमविजयगणिवरादिभिः सह सौर्यपुरीसंघाग्रणीजनाग्रहवशात्तत्रैवाचीकरन् । चातुर्मासेऽस्मिन्नपि मोहमयीसंघाग्रणीजनानां पुनर्विज्ञप्तिः समागता । अतोऽनुग्रहधिया सूरिप्रमुखैस्तत्र क्षेत्रस्पर्शनानुसारेण सा स्वीकृता । चातुर्मास्यां संपूर्णायां सत्यां ततो विहृत्य पञ्चाशीत्यधिकैकोनविंशतिशततमे वर्षे पूज्यैर्मुम्बापुर्यां लालबागोपाश्रये समुविश्रुतविशालशासनप्रभावकरत्नत्रयाढ्यलोकलोकोत्तरान्विपद्मुख्यैः सह चातुर्मासी कृता । वैरष्टाविंशतिस्वधर्मवृषभशिष्यैः सह १९८५ तमे वर्षे वैशाखकृष्णषष्ठीमंगलप्रभाते मुम्बापुर्यां प्रवेशः कृत आसीत् । तदा च तत्रस्थानेकग्रामनगरदेशवास्तव्यानेकसंघाग्रणीभिस्तेषां मूर्तिमद्धर्मधुरन्धराणां जैनाचार्यजगद्गुरुवराणां परमोत्कर्षप्रख्यापकातुलानन्यासदृशाभूतपूर्वातिमहत्स्वागतं कृतम् ।

## उपाध्यायपन्यासादिपदप्रदानम्

श्रीसंघाग्रहनिर्बन्धेन तत्रैव कारणिकं द्वितीयमपि चातुर्मासं पूज्यपुरोगाः कृतवन्तः । ततवत्सलनाथैः सूरिसत्तमैः स्वीयप्रशिष्यमुनिप्रवरश्रीरामविजयवरान् श्रीपञ्चमाङ्गविवाहप्रज्ञप्तिसूत्रयोगोद्वहनं कारयांचक्रे । चातुर्मासानन्तरं च १९८५तमे वर्षे कार्तिकमासे कृष्णतृतीयादिने श्रीमायकलाश्रेष्ठिमोतिशाहकारितजिनप्रासादबहिर्भव्यमण्डपे स्थानिकतदितरसंघजनसाग्रहविज्ञप्तिसातत्येन श्रीसङ्घसमक्षमेव महमहोत्सवपूर्वकं तपोगच्छगगनाधीश्वरा इमे पूज्यपादाः स्ववरदहस्तेन स्वीयविनेयावतंसकान् पन्यासप्रवरश्रीमत्प्रेमविजयगणिवरान् प्रकरणप्रणेतृपादान् **"सिद्धान्तमहोदध्युपाध्यायपरमेष्ठ्युपपदाभ्यां"** मुनिप्रवरश्रीरामविजयपादान् **"व्याख्यानवाचस्पतिगणिपन्यासप्रवरपदैश्च"** विभूषयांचक्रुः । परमपुण्यावसरेऽस्मिन् पञ्चानां वैराग्यरसरञ्जितानां मुमुक्षुवर्य्याणां सुन्दरसमारोहसद्धिवं पवित्रपारमेश्वरीप्रव्रज्या समभून्, धर्माभिलाषिबहुजनाश्चतुर्थव्रतद्वादशव्रतसम्यक्त्वविंशतिस्थानकादितपःप्रमुखव्रतनियमा नन्दिसमक्षं सविधिना पूज्यप्रवरसूरिसत्तमपुण्यहस्तैर्जगृहुः । एवं पूज्यपादानुग्रहेण मुम्बापुर्यां कतिपयवर्षशताभूतपूर्वा श्रीजिनशासनोन्नतिर्भूरियंभूव । तदनन्तरं मोहमयीशाखापुरेऽन्धेरीस्थाने तत्रस्थसंघेनोपधानतपोवाहनार्थमामन्त्रिते सति सूरिसंक्रन्दनादयः सर्वे तत्रागत्योपधाननतपो वाहयामासुः । तत्रापि मालारोपणावसरे पुनरन्ये चतुर्भिर्मुमुक्षुभिर्भागवतीदीक्षा प्रतिपेदिरे । तत्र महानुत्सवो बभूवान्येषां मुनिवराणामुपस्थापनादि संजाता । अत्रान्तरे श्रीदिग्विजयि[illegible]
जात्यधार्मिकसंस्थासम्मेलनकारकश्राद्धरत्नानां विशिष्टविज्ञप्त्या मुनिवराः पाटण[illegible]

पन्यासप्रवरश्रीरामविजयगणिवरादिसंख्यापन्नसाधुभिः सह सौराष्ट्रराष्ट्रस्थवर्धमाननगरीं प्रेषयामासुः ।

## वर्षितपस्तत्पारणकं च

इतस्तपःकृष्टा अपि सूरिसत्तमा वर्षितप आरब्धवन्तः । अन्येद्युरुपधानकालानन्तरं स्वीयलोचनव्याध्युपचारयोग्यपरिपक्वकालमलभमानाः लोचनव्याधितादृगुपचारमन्यत्रापश्यन्तो निजप्रशिष्यविद्वद्वर्यमुनिप्रवरश्रीजम्बूविजयादिमुनिवरैः सह कारणिकमेतच्चातुर्मासमपि तत्रैव मोहमय्यां लालबागोपाश्रये कृतवन्तः । एतदपि पूर्ववद्बहुधः शासनप्रभावनापुरस्सरं संपूर्णं बभूव । अद्यावधिपर्यन्तमपि स्वीयनेत्रव्याधिपरिचर्या-( operation ) योग्यसमयमनधिगच्छन्तोऽन्यत्र तादृक्परिचर्यासामग्रीदुर्लभतां जानन्तोऽपि 'विहारं मा कुर्वन्तु, मा कुर्वन्तु गुरवः', 'अत्रैव तिष्ठन्तु, अत्रैव तिष्ठन्तु' इति गुरुगुणगुणानुरागबद्धचेतसां श्रीसंघजनानां सहृदयद्रावकान्धर्मभावलोलीभूतान्करुणविलापान् शृण्वन्तोऽप्यमी त्रिलोकीहृदयानन्ददायकाः सूरिवराः श्रीसङ्घं संतुष्य ततः प्रतस्थुः । सूरिप्रवरास्ततो निर्गत्य स्वीयप्रशिष्यप्रसिद्धवक्तृमुनिप्रवरश्रीजम्बूविजयादिमुनिवरैः सहानेकग्रामनगरान् स्वीयपवित्रचरणरेणुभिः पावयन्तो निजागाधज्ञानबलेन विबोधयन्तो जिज्ञासुजनान् तपोव्रतादिधर्मक्रियाः कारयन्तः परमपवित्रश्रीशत्रुञ्जयतीर्थयात्रार्थं श्रीपुण्डरीकगिरिकिरीटकल्पयुगादिदेवश्रीनाभेयजिनराजदर्शनवन्दनार्थं सौराष्ट्रराष्ट्रं प्रति विजहुः । मार्गे शरीरास्वास्थ्यं जातम् । सूरिभिर्दमणनगरे तत्रत्यभाविकसश्रालश्रावकश्राविकाग्रहविशेषेणावस्थानं कृतं तेन च सङ्घे क्लेशशान्त्याद्यात्मकाभूतपूर्वो लाभः समजनि । शरीरास्वास्थ्ये विद्यमानेऽपि ततो विहृत्य शनैः शनैः १९८८ चैत्रकृष्णपञ्चम्यां सूर्यपुरं प्रापुः । श्रीसङ्घाग्रहेण श्रीगुरवस्तत्रैवावस्थानं कृत्वा वैशाखशुक्लतृतीयादिने श्रीवर्षितपः पारितवन्तः । श्रीसङ्घेन तपःपारणप्रमोदात्पूजाद्युत्सवः कृतः । गिरिवरदर्शनोत्कण्ठया श्रीगुरुवर्यास्ततोऽपि विहारमकार्षुः परं तादृक् स्पर्शनाबलाभावेन स्वशरीरशैथिल्यादिकारणेन तेषां पुनर्भृगुकच्छनगरेऽवस्थानं जातम् । तत्र सूर्यपुरभृगुकच्छादिसङ्घनायकैर्बहुधा चातुर्मासकरणार्थं विज्ञप्तिः कृता परं तत्पूर्वमेव वर्धमानपुरीविज्ञप्तिरागताऽऽसीत् । सा पुनरप्यात्रागता । तत्र गन्तुं मनसीकृतम् । स्वास्थ्ये जाते गुरुभिः पुनस्ततोऽपि स्वविहारः पुरस्कृतः । इतः पाठकप्रकाण्डश्रीमत्प्रेमविजयानूचानपादाः पत्तनवर्षाकालानन्तरं स्वीयशिष्यरत्नपन्यासप्रवरश्रीमद्रामविजयगणिवरादिमुनिवरैः सह मुमुक्षुवराननेकान् प्रव्राजयन्तोऽनेकागमतत्त्वाभिलाषुकजनान् प्रतिबोधयन्तः स्वीयाद्भुतप्रतिभाप्रकर्षेणाचार्यपादैः सह यात्रार्थं सौराष्ट्रजनपदं प्रति समाजग्मुः । सर्वेषां च तच्चातुर्मासं वर्धमाननगरकाम्पमध्ये संजातम् ।

## अयमेव हि विंशतिशताब्दीमान्तभागमयः समयो यः प्रस्तुतप्रकरणप्रणेतृपादानां समयनिर्देशतया निर्दिश्यते ।

अमी पूज्यपादाः कर्मप्रकृत्यादिगहनतत्त्वविचारचतुरा अस्य ग्रन्थरत्नस्य विधातारो निर्धारयन्तु भो धीधनाः । अमीषां जन्मभूमिः पिण्डवाडाख्या शीरोहिराज्यमध्ये, मातुरभिधानं कङ्कुबाई, पितुर्भगवानदास इत्यवधारणीयम् । प्रव्रज्या जन्मतः षोडशवर्षे पालीताणाख्यनगरे वैक्रमीय १९५७ तमे वर्षे कार्तिकमासेऽभवत् । एतेषां पदव्यादि तूपरि विलोकितमेव । एषां भगवतां पादमूले बहवः साधुश्रावकादयो वाचना गृहीत्वा कर्मसाहित्यविशारदा भवन्तः पश्याम एव । तेषां सर्वेषां चोपकाराय ग्रन्थ-

निर्माणमुररीकृतं कृपावर्द्धिविक्रमाब्दैकोनशताष्टसप्तत्याम्। एकोनशतपञ्चाशीतौ मुम्बापुर्यां स्वर्गिणेऽन्न मुनिवर्य्यश्रीमज्जम्बूविजयपादे तज्ज्ञानं स्वस्मात्संक्रमितवन्तस्संक्रमविधिकुशलाः। सोऽयं ग्रन्थ एतावता प्रयासेन प्रथमविभागनिर्दिष्टसंशोधकानां प्रसादेन च प्रसिद्धिमागतः सर्वैः स्वागतार्ह इति निश्चसिमः।

ग्रन्थोपक्रमः—

अस्मिन्विभागे गत्यादिमूलचतुर्दशोत्तरद्वाषष्टिमार्गणा अवतारिताः प्रत्येकस्मिंश्च गुणस्थानपूर्वका बन्धादयो निरूपिताः। तेन संक्रमप्रतिग्रहौ तत्प्रकृतिस्थानभङ्गसहितावल्पाभ्यासिनाऽपि विनाऽऽयासेन बुध्येते। मार्गणास्वेतान्सुदीर्घं विचिन्त्य पूज्यप्रवरैः प्रान्ते संवेधोऽपि दर्शितः। सोऽयं समस्तविषयस्य सर्वोमं भवति। एवमाद्यविभागान्तर्वर्तमानः प्रकृतिसंक्रमोऽस्य विभागस्य सपादशतानि पृष्ठानि निरुध्य बहूनां वस्तूनां सविस्तरं गभीरं ज्ञानं समर्पयन्समाप्तीभवति।

षड्विंशत्यधिकशततमात्पृष्ठात्स्थितिसंक्रमः पञ्चचत्वारिंशदुत्तरशततमादनुभागसंक्रमस्त्रिषष्टिशततमात्प्रदेशसंक्रमश्च प्रारभ्यमाणा उपलभ्यन्ते। त्रयोऽप्येते संक्रमाः स्वलाक्षणिकस्वरूपाणिविशदीकुर्वन्तोऽध्येतॄणां मनःशल्यान्यपाकुर्वन्ति।

एतदेवामीषां ग्रन्थकाराणां महत्तरत्वं यदनेकानेकदृष्टिबिन्दुपुरस्सरं सैद्धान्तिकप्रमाणैस्सह पठितृभ्योऽभिधेयस्य न केवलं सर्वस्पर्शिज्ञानं समर्पणीयमपि त्वेतादृगतीन्द्रियज्ञेयमपि सूक्ष्मस्थूलयन्त्रद्वारैः प्रत्यक्षमिवकरणीयम्।

रचयितृपादैः स्थितिसंक्रमेऽध्यवसायस्थानकानां हृदयं सुदृढ्ढाटितं लक्ष्यते। अनुभागसंक्रमे पृष्ठे शतपट्चत्वारिंशे "स्नेहशब्देन सप्रतिपक्षस्निग्धस्पर्शो ग्राह्य" इति या चर्चा सूचिता सा वद्विषये सन्धासन्धविचारकविद्वज्जनेभ्यः प्रकाशं दत्वा मार्गप्रदायिका बुध्यते। रसस्थानेषु षट्स्थानकानां बोधस्तैः परमोपकारिभिस्सम्यक् प्रदत्तो विलोक्यतां धीधनैः। प्रदेशसंक्रमे चोद्वलनाविध्यातयथाप्रवृत्तिगुणसर्वस्तिबुकसंक्रमाणां गुणितकर्मांशक्षपितकर्मांशादीनामपि स्वरूपं सुगमतया दर्शितं दृश्यते। संक्षेपेणैभिरसमर्थागाधागमाभ्यासिग्रन्थकर्तृभिर्न कोऽप्युपयोगिविषयः स्वकुशलेस्मिन्यानवतारितो रक्षितः।

एवमयं ग्रन्थरत्नाकर एकनवत्युत्तरशततमे पृष्ठे सम्पूर्णो जायते। द्विनवत्युत्तरशततमादुद्वर्त्तनापवर्त्तनाख्यकरणप्रकरणमपि सहयोजितं वर्तते। निःशङ्कितं तेनाखिलग्रन्थप्रासादस्य शिखरायितं कृत्वोपयुक्ततायामन्या एव वृद्धिः कृता। प्रान्त एकोत्तरद्विशततमपृष्ठस्था प्रशस्तिर्विलोकनीया। एषा श्रीजिनशासनस्य जिनवाङ्मयस्य वाङ्मयाकृत्रिमप्रणेतॄणां प्रणेत्रुपासकवरशासनाविच्छित्तिकारकमहानुभावाचार्यपुङ्गवानां ग्रन्थकारमहर्षिपर्यन्तानां चानुपमप्रभावकतां प्रकटीकरोति।

विषयविस्फोटकराणि यन्त्राणि शतद्वयप्रमितान्यस्मिन्विभागेऽपि सहृदयानां हृदयमाहरन्ति। कथितैव सा विशेषता या वैशिष्ट्येपीक्रियते ग्रन्थनमुख्यस्याद्यविभागगतवाङ्मुखे। अनयोर्द्वयोरपि सम्बन्धगृहीतानामन्यान्यसन्दर्भाणामकाराद्यनुक्रमणिकाऽस्मिन्प्रकाशने प्रकाशिता प्रकाशकैः। ऐदंयुगीनमुद्रणयुगबुद्धीनपेक्ष्य सा स्वागतार्हा। द्विषष्टिनिबन्धनानामुल्लेखोऽनया कृतो विलोक्यते। आशाम्बरीयगोम्मटसारादिकतिपयग्रन्थानामसंगतमतानि पूज्यपादैर्नाखण्डितान्युपेक्षितानि। एतत्सर्वं ग्रन्थकर्तृपादानां बहुश्रुतत्वं प्रतिभाप्रकर्षत्वं ग्रन्थस्य युक्तियुक्तत्वेनावश्यंतयाऽभ्यसनीयत्वं च डिंडिमनादेनोद्घोषयत्यलम्।

- गीर्वाणगिरायां ग्रन्थरचनया। अनया विद्वद्वर्यपादैर्दयुगीना त्रुटिर्दूरीकृतेति तावदेकम्, न केवलं जैनसाहित्यस्य गीर्वाणगिराया अपि सगौरवं वात्सल्यं कृतमिति द्वितीयम्, विद्वन्मुद्राधारिसहृदयसाहित्यसेवकान्प्रति सेवायाः क्षेत्रं प्रदर्शितमिति तृतीयम्, मोक्षस्यानन्योपायरत्नत्रयीवदवधारयन्तु भव्यजनाः। महत्प्रयासजनितो ग्रन्थोऽयं स्वससूत्रताया जैनवाङ्मयकोपेऽनर्घ्यरत्नस्थानमविनश्वरमवाप्नुयन्निश्चीयते। सर्वे पठन्त्वन्यान्यरूपेण प्रतिफलद्भवरोगनिदानं विचित्रकर्मस्वरूपमवगच्छन्तु तद्ग्रन्थाद्विरमन्तु चेत्यादि भावयन्त्वौषधकल्पमवन्ध्यमारोग्यबीजं श्रीजिनोपज्ञचारित्रं साध्नुवन्तु चेत्यभिलपन्विरमेऽहमस्माल्लघुप्रयासात्।

राजनगरे जैनविद्याशाला
वीरात् २४५९ श्रावणकृष्णा ८

पाठकपुङ्गवपुङ्गवपूज्यप्रवरश्रीमत्प्रेमविजयानूचानपादान्तिपद्गत्नप्रबुद्धपरिवृढश्रीमज्जम्बूविजयगुरुपादपयोरुहपरागपर्युपासनापरायत्तो **मुनी रक्षितविजयः।**

---

## द्वितीयविभागगतशुद्धिपत्रशेषम्।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| ३० \| १६३२ ३ \| १ | ३० \| १६३२ | २० | ६ प्र.यं. |
| १ | २ (सास्वादने गोत्रबन्धः) | ३७ | ४ ,, ,, |
| मिश्रे—१ | मिश्रे—२ (वेद०) | ५० | अन्त्य-,, |
| मिश्रे-४४ | मिश्रे—७४ (सर्वा०) | ५७ | प्रथमयं० |
| त्रयोदशैकादशे० | त्रयोदशनवेति | ६२ | ५ अं० |
| श्चैकादश | श्च नव | ,, | ३ ,, |
| एवं क्षीणमोह | एवं सयोगी | ६७ | यं० |
| त्रिंशत्यष्टाधिक | त्रिंशति षोडशाधिक | ,, | २ अन्त्या. |
| चाष्टौ | च नव | ,, | |
| देवनारकाः संख्ये | देवनारकासंख्येय | ७० | ८ |
| मिथ्यात्वे-२१ | मिथ्यात्वे-२६ (मो०) | ७१ | द्वि.यं० |
| सप्तति | सप्तसप्तति | ८१ | १७ |
| येऽविरते | येऽविरते मिथ्यात्वे | ८३ | २५ |
| आघ | आघवर्जे | ,, | ,, (यन्त्रेऽपि सद्बदृशेयम्) |
| स्थानत्रिक | स्थनद्विक | ,, | ,, |
| सप्तप्रकृतयो | सप्ताप्रकृतयो | ,, | ३३ |
| असंज्ञिनि च | च | ,, | ३४ |
| शुद्धस्तनासमाश्यमा | ममा | ८४ | ६ |
| सासादन | असंज्ञिनि सासादन | ,, | १९ (यन्त्रेऽपि सद्वत) |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| तस्य च | | ८६ | ३ |
| त्रीणि | द्वे | ८७ | ९ |
| स्येकविंशति-रूपाणि | तिरूपे | ,, | ९-१० |
| भवनपत्यादिषु | असंख्येयवर्षायुष्केषु | ९० | ३ |
| तेजोलेश्यादि | कृष्णलेश्यादि | ९१ | यन्त्र |
| ५ / ४ | ५ / — | ९६ | ,, |
| ९ [१०] | १० | ,, | ,, |
| ९ १० | १० | ९७ | ,, |
| ९तः१३षु-९० -८३-८२ | ९तः१३षु९०-८९-८३ -८२ | ,, | ,, |
| ९ [११] | १० १२ | ,, | ,, |
| ...चारित्रेषु | ...चारित्रेषु यथाक्रमम् | ९८ | १३ |
| गुणस्थानद्वयेऽपि | गुणस्थानद्वये चतुष्के च | ,, | ,, |
| ओघे १५२ | ओघे १५३ | १०० | यं० |
| चतुर्विधेष्वपि | वैमानिकेषु | १०२ | २ |
| एवं पुंवेदेऽपि | | १०४ | १ |
| त्रयोविंशत्येक | त्रयोविंशतिद्वाविंशत्ये | ,, | ,, |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| द्विकयुत | द्विकवियुत | १०६ | २ |
| क्षीणमोहे | उपशान्तमोहे क्षीणमोहे च | ,, | २२ |
| त्रीणि | द्वे प्रतिग्रहस्थाने त्रीणि | ११२ | १५ |
| नव | एकादशद्वादशनव | ११२ | २८ |
| अष्टौ | दश | ,, | ,, |
| [ २४ स- ] | [ २४-२८-स. ] | ११६ | पं- |
| तेजस्कायिकेषु | तेजोवायुकायिकेषु | ११९ | १३ |
| दारम्य सूक्ष्म | दारम्यानिवृत्तिबादर | १२० | २६ |
| त्रिनवतिचतुर- शीतिरूपाणि- चत्वारि संक्रा- मन्ति | रूपे द्वे संक्रामतः | ,, | ३२ |
| १०२-९५ | १०२-९५ | १२३ | पं० |
| ,, ,, | ,, | | |
| १०२, ९५ | १०२, ९५, ९३, ८४ | १२५ | ,, |
| संक्रामति | संक्रामन्ति | ,, | २४ |
| सुभिटाण | सुभियाण | १५१ | १४ |
| बद्धा | बन्धा | १५६ | २३ |
| प्राप्यते, | प्राप्यते, क्षीणमोहे निद्राद्वि- कस्योदयवतीत्वस्वीकारे स- मयाधिकावलिकाशेषायां स्थितौ वर्तमानस्य प्राप्यते, एतदपेक्षया च जघन्यस्थिति- संक्रमः प्राक् स्वयकृतादुक्तः। | ,, | ३२ |
| मनुष्यमनुष्यो | मनुष्यो | १६० | १७ |
| गोत्रामशस्त | गोत्रोपोत्तामशस्त | १६९ | १३ |
| नी० | नी० उद्यो० | १७० | पं० |
| ( ३९ ) | ( ४० ) | ,, | ,, |
| २९ / २९ / २९ | | ,, | ,, |
| सुस्वरोदय | सुस्वरादेय | १७५ | १३ |
| वर्तमानमौ | वर्तमान औ | १८० | २ |
| गुणितकर्मांशे | गुणितकर्मांशो | ,, | १० |
| वलिकान्तरत्वेन | वलिकातिक्रान्तत्वेन | १८१ | २० |
| प्रदेशसंक्रमेण | प्रदेशसंक्रमेण स्तिबुकसं- क्रमेण | १८७ | १३ |
| द्वाभ्यां | द्वाभ्यामावलिकाभ्यां असंख्येय- भागाभ्यां | १९५ | ३ |
| द्विसमयाधिका- वलिकात्रिभाग- प्रमाणा | द्वित्रिभागावलिकाप्रमाणा | १९७ | १३ |
| त्रिसमयाधि- कावलिकात्रि- भागप्रमाणा | समयाधिकद्वित्रिभागावलि- काप्रमाणा | ,, | १४ |
| समयाधिका | अबाधान्तर्गतानि समया- धिका च | २०० | २१-२२ |
| व्यबाधा | व्यतिस्थापना | २०१ | १९ |

अत्र प्रथमविभागगतशुद्धिपत्रशेषमपि पाठकैर्निर्धारणीयम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| उद्वलितमिश्र- मोहनीययोर्मि- थ्यादृष्टि | उद्वलितसम्यक्त्वमिश्रमोह- नीययोर्मिथ्यादृष्टिरनादिमि- थ्यादृष्टि | २२ | पं० |
| ६ । ३ | ५ । ३ | ३२ | ,, |
| ५ । २ | ६ । २ | ,, | ,, |
| ४ । ३ | ३ । ३ | ,, | ,, |
| ३ । २ | ५ । २ | ,, | ,, |
| यद्वा नारकद्विके | यद्वा नरद्विके | ३३ | ,, |
| ममनुष्याणां | माणां | ४९ | २८ |
| दे० ,, | दे० ,, | ५८ | पं |
| ,, ,, | ० ० | | |
| दे० ० | दे० ० | ५९ | ,, |
| ,, ० | ,, गा० | | |
| पं | णं भन्ते | ७३ | २७ |
| मंदिआ | मंडीअपुत्ता | ,, | २८ |
| भवतः | भवतः, संयमवतो हि पूर्व- [कोटिरेव परमायु, स च संयममष्टसु वर्षेषु गतेष्वेवलभते | ,, | ३१ |

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| त्तापेक्षया | त्तान्तर्मुहूर्त्तापेक्षया | ७३ | ३२ |
| स्थितिखण्ड | रसखण्ड | ७८ पृष्टसक्-परिशिष्टम्(५) | |
| तिर्यक्पदस्थान | तिर्यक्पदस्थान | ८१ | १ |
| | १ विशुद्ध्यपेक्षया षट्स्थान-लक्षणा, अध्यवसायापेक्षया तु चतुःस्थानलक्षणा । | | |
| गुणसंक्रमानु-विद्धोद्वलना-संक्रमोऽपि | उद्वलनसंक्रमानुविद्धगुणसं-क्रमोऽपि | ८५ | यं० |
| आवलि० | आवलिका तु स्तिबुकसंक्रमे-णान्यत्रोदयवतिषु संक्रामति | ८६ | यं० |
| क्षीयते । | क्षीयते । तथा गुणश्रेणिसम्ब-न्धिनः संख्येयभागाः प्रथम-द्वितीयस्थित्याश्रितास्तिष्ठन्ति, एकं तु गुणश्रेणेः संख्येयतमं भागमन्तरकरणदलिकेन सह विनाशयति । | ८७ | २१ |
| भवति ॥ | भवति ॥ सम्यक्त्वलाभप्र-थमसमयादारभ्य मिथ्यात्वं गुणसंक्रमेण सम्यक्त्वमिश्र-[योः संक्रमयति अन्तर्मुहूर्तं यावत्, ततो विध्यातसंक्रमः । गुणसंक्रमकालं यावत् सप्तानां कर्मणां स्थितिघातरसघातगु-णश्रेणयोऽपि प्रवर्तन्ते । मिथ्यात्वस्य प्रथमस्थितौ आवलिका द्विकशेषायां गुण-श्रेणिर्निवर्तते, आवलिका शेषायां तु स्थितिघातरसघातौ निवर्तेते । औपश-मिकाद्धाया. किञ्चित्समधिकावलिकाशे-षायां स्थितौ वर्तमानस्त्रयाणामपि द्वि-तीयस्थितिगतानां सम्यक्त्वादिपुञ्जानां दलिकमध्यवसायविशेषेण समाकृष्यान्त-रकरणचरमावलिकायां प्रक्षिपति, तत्र प्रथमसमये प्रभूतं द्वितीयसमये स्तोकं तृतीयसमये स्तोकतरं, एवं तावद्वाच्यं यावदावलिकाचरमसमयः । दलिकरच-ना तु स्थाप्यमाना गोपुच्छाकारा भवति । अन्तरकरणावलिकाशेषायां स्ववतारि-[तद्दलिकस्य सम्यक्त्वादिपुञ्जानामन्यत-मसम्बन्धिन उदयो भवति, यदा शुभप-रिणामस्तदा सम्यक्त्वपुञ्जोदयः, मध्य-मश्चेत् मिश्रोदयः, अशुभश्चेत् मिथ्या-त्वदलिकोदयः । | ८७ | १० |
| समये | समयादौ | ९७ | ४ |
| दीरणाभा | दीरणायामा | ,, | ,, |
| पूर्वस्पर्द्धकेभ्य | पूर्वस्पर्द्धकेभ्योऽपूर्वस्पर्द्धके. | १०२ | २७ |
| भागेषु | भागेषु गतेषु | १०५ | १ |
| स्थिता | स्थित | १३२ | ४ |
| कृतस्य | कृतास्त | ,, | ७ |
| स्थान | स्थ | ,, | १० |
| खण्ड | खण्डो | १३३ | १४ |
| प्रथमव्यापारः | प्रथमसमयव्यापारः | १३४ | २२ |
| एकजी– | एकस्मिन्समये एकजी– | १४४ | ४ |
| चोक्तानि | च वक्ष्यमाणानि | १५१ | २ |
| यम | याम | ,, | १३ |
| मबद्धा | बद्धा | १५२ | २५ |
| विंशतिः | द्वाविंशतिः | १५६ | १ |
| द्वे | | १७० | १ |
| स्थाने च | स्थानं चैकम् | ,, | ,, |
| ऊर्ध्वं | ऊर्ध्वमन्तर्मुहूर्तं क्षायोपशमि-कसम्यग्दृष्टेस्तु | ,, | १० |
| त्रिंशत्प्रतिग्रहे चतु-मिति । | एवं त्रिंशत्प्रतिग्रहेऽपि । | १८४ | अन्त्या |
| २९ | २९–३० | १८५ | यं०४ |
| तिर्यग्भ्यः | शेषाः | ,, | ,,५ |
| ३०।९५।चातुर्ग० | | ,, | ,,६ |
| नारका देवाश्च | तिर्यग्नराः | १८६ | ,,२ |
| स्युक्तो | स्युक्तो नाम्नो | १८८ | ६ |
| ॥ | ॥ तदुक्तं चोक्तो गुणस्थानेषु प्रतिग्रहसंक्रमस्थानानां संवे-[धः । तदुक्तं चोक्तं गुणस्थानद्वारेण प्रति-ग्रहसंक्रमस्वामित्वमिति ॥ | ,, | ७ |
| करण | करणा | १८९ | १४ |
| तत्र | तत्र मनुष्यप्रायोग्ये | १९० | ३ |
| –शायां | –शत्यामेकोनत्रिंशति च | ,, | ,, |
| एकोन– | देवप्रायोग्ये एकोन– | ,, | ,, |

☞ इमे द्वेऽपि शुद्धिपत्रके पश्चात्कृतत्वेनानुक्रमणिकायां न लिखिते इति ज्ञेयं पाठकवरैः ।

शासन-प्रभावक, प्रवचन पारंगत-



जन्म, विक्रम सं-१९२४ — झाडुवाडा

दीक्षा विक्रम सं-१९४६ — गोघा

आचार्य पद-१९८१ — छाणी

गणि-पन्यास पद-१९६२ — खंभात

"आचार्य श्रीमद् विजयदानसूरीश्वरजी महाराज ।"

"गम्भीरिमाधरितवारिनिधि प्रबुद्ध- बोधप्रभाप्रतिहतांशुमदिन्दुधामा ।
रत्नत्रयीवितरणाज्जितपारिजातो, जीयात्प्रभुर्विजयपूर्वकदानसूरि ॥१॥"

# "संक्रमकरणम् ।"

## (द्वितीयो विभागः)

---

साहंपूर्विकसंस्तुतानभयदान्नत्वा नृदेवासुरैः ।
भागे शिष्यजनस्यकोपकृतये द्वैतीयके सांक्रमे ॥
सत्तासंक्रमयोः पतद्ग्रहयुजो बन्धस्य गत्यादिषु ।
संवेधो समुदीर्यते प्रकृतिकस्थानादिवस्तूनि च ॥ १ ॥

अथ प्रकृतिसंक्रमे मार्गणाधिकारः प्रकाश्यते—

"गईन्दिए अ काए जोए वेए कसायनाणे य ।
संजमदंसणलेसाभवसम्मे सन्नि आहारे ॥ १ ॥"

गतिद्वारं चतुर्विधम्, नारकतिर्यङ्नरामरभेदात् । इन्द्रियद्वारं पञ्चधा, एकद्वित्रिचतुष्पञ्चेन्द्रियभेदात् । कायद्वारं षड्विधं, भूजलानलानिलवनस्पतित्रसभेदात् । योगद्वारं त्रिधा, मनोवाक्कायभेदेन । वेदद्वारमपि त्रिविधम्, स्त्रीपुंनपुंसकभेदात् । कषायद्वारं चतुर्विधम्, क्रोधमानमायालोभभेदात् । ज्ञानद्वारमष्टधा, मतिश्रुतावधिमनःपर्यवकेवलज्ञानमतिश्रुताज्ञानविभङ्गज्ञानभेदात् । संयमद्वारं सप्तधा, सामायिकच्छेदोपस्थापनीयपरिहारविशुद्धिकसूक्ष्मसम्परायययथाख्यातदेशविरत्यविरतिभेदात् । दर्शनद्वारं चतुर्धा, चक्षुरचक्षुरवधिकेवलदर्शनभेदात् । लेश्याद्वारं षोढा, कृष्णनीलकापोततेजःपद्मशुक्लभेदात् । भव्यद्वारं द्विविधम्, भव्याभव्यभेदेन । सम्यक्त्वद्वारं षोढा, क्षायोपशमिकौपशमिकक्षायिकसास्वादनमिश्रमिथ्यात्वभेदात् । संज्ञिद्वारमाहारद्वारं च सप्रतिपक्षं द्विप्रकारं भवति । विशेषजिज्ञासुभिरेतासां द्वाषष्टिमार्गणानां स्वरूपमस्मत्कृत'मार्गणाद्वारविवरणाद'वसेयमिति ॥

अथ मार्गणास्थानेषु प्रतिग्रहोपयोगित्वेन पूर्वं गुणस्थानेषु बन्धप्रकृतय उक्ता अपि पुनरुच्यन्ते–तत्र ज्ञानावरणपञ्चकं दर्शनावरणनवकं वेदनीयद्विकं मोहनीयषड्विंशतिरायुश्चतुष्कं नाम्नः सप्तषष्टिर्गोत्रद्विकमन्तरायपञ्चकमिति विंशत्यग्रशतं सामान्येन बन्धे प्राप्यते । मिथ्यादृष्टौ जिनाहारकद्विकवर्जं सप्तदशोत्तरशतं बन्धे प्राप्यते । सास्वादनसम्यग्दृष्टौ नरकत्रिकजातिचतुष्कस्थावरचतुष्कातपहुण्डसेवार्त्तनपुंसकमिथ्यात्ववर्जैकोत्तरशतं बध्यते । मिश्रगुणस्थानेऽनन्तानुबन्धिचतुष्कमध्यमाकृतिसंस्थानचतुष्काशुभखगतिनीचगोत्रस्त्रीवेददुर्भगत्रिकस्त्यानर्द्धित्रिकोद्योततिर्यग्द्विकतिर्यगायुरितिपञ्चविंशतेः बन्धाभावो नरदेवायुषोरबन्धः ततः शेषाः चतुःसप्ततिः बन्धे प्राप्यते । अविरतसम्यग्दृष्टौ जिनसुरनरायुर्युतं सप्तसप्ततिः बध्नाति । देशविरते मनुजत्रिकौदारिकद्विकप्रथमसंहननाप्रत्याख्यानकषाय-

चतुष्कवर्जा सैव सप्तसप्ततिः सप्तपष्टिर्भवति । प्रमत्ते सैव सप्तषष्टिः प्रत्याख्यानकपायचतुष्कविहीना त्रिषष्टिर्भवति । अप्रमत्तेऽरतिशोकास्थिरद्विकायशःकीर्त्त्यसातवेदनीयसुरायुर्वर्जाहारकद्विकयुता सैव त्रिपष्टिरष्टपञ्चाशद्भवति । यद्यत्र सुरायुर्बन्धं कुर्वन्नागच्छेत्तदैकोनषष्टिः भवति । अपूर्वकरणप्रथमभागेऽष्टपञ्चाशत् द्वितीयादिपञ्चभागे निन्द्राद्विकवर्जषट्पञ्चाशत्, सप्तमभागे सुरद्विकवैक्रियद्विकाहारकद्विकसमचतुरस्रसंस्थानशुभखगतिपञ्चाक्षजातिपराघातोच्छ्वासजिननामध्रुवबन्धित्रसनवकवर्जाः षड्विंशतिर्भवति । अनिवृत्तिप्रथमभागे हास्यरतिभयजुगुप्सावर्जा द्वाविंशतिर्भवति, द्वितीयभागे पुंवर्जैकविंशतिः, तृतीये संज्वलनक्रोधवर्जविंशतिः, चतुर्थे मानवर्जैकोनविंशतिः । पञ्चमे मायावर्जाष्टादश । सूक्ष्मसम्पराये लोभवर्जा सप्तदश । उपशान्ते क्षीणे सयोगिनि च सातरूपैकैवेति ॥

॥ गुणस्थानेषु बन्धयन्त्रकम् ॥

| कर्माणि- | ज्ञाना० | दर्शना० | वेदनीय | मोहनीय | आयुः | नाम | गोत्र | अन्तराय | सर्वाग्रम् |
|---|---|---|---|---|---|---|---|---|---|
| ओघे बन्धः- | ५ | ९ | २ | २६ | ४ | ६७ | २ | ५ | १२० |
| मिथ्यात्वे | ५ | ९ | २ | २६ | ४ | ६४ | २ | ५ | ११७ |
| सास्वादने | ५ | ९ | २ | २४ | २ | ५१ | २ | ५ | १०१ |
| मिश्रे | ५ | ६ | २ | १९ | ० | ३६ | १ | ५ | ७४ |
| अविरते | ५ | ६ | २ | १९ | २ | ३७ | १ | ५ | ७७ |
| देशविरते | ५ | ६ | २ | १५ | १ | ३२ | १ | ५ | ६७ |
| प्रमत्ते | ५ | ६ | २ | ११ | १ | ३२ | १ | ५ | ६३ |
| अप्रमत्ते | ५ | ६ | १ | ९ | १–० | ३१ | १ | ५ | ५८–५९ |
| अ०क०१भागे | ५ | ६ | १ | ९ | ० | ३१ | १ | ५ | ५८ |
| अ० २–६ | ५ | ४ | १ | ९ | ० | ३१ | १ | ५ | ५६ |
| अ० ७ भागे | ५ | ४ | १ | ९ | ० | १ | १ | ५ | २६ |
| अनिवृत्तिप्र० | ५ | ४ | १ | ५ | ० | १ | १ | ५ | २२ |
| अनिवृत्तिद्वि० | ५ | ४ | १ | ४ | ० | १ | १ | ५ | २१ |
| अनिवृत्तितृ० | ५ | ४ | १ | ३ | ० | १ | १ | ५ | २० |
| अनिवृत्तिच० | ५ | ४ | १ | २ | ० | १ | १ | ५ | १९ |
| अनि०पञ्च० | ५ | ४ | १ | १ | ० | १ | १ | ५ | १८ |
| सूक्ष्मसम्प० | ५ | ४ | १ | ० | ० | १ | १ | ५ | १७ |
| उपशान्ते | ० | ० | १ | ० | ० | ० | ० | ० | १ |
| क्षीणे | ० | ० | १ | ० | ० | ० | ० | ० | १ |
| सयोगिनि | ० | ० | १ | ० | ० | ० | ० | ० | १ |
| अयोगिनि | ० | ० | ० | ० | ० | ० | ० | ० | ० |

